प्रायः स्वनाशमुत्प्रेक्ष्य भाविनं रेणुसंचयः ।
रुरोध सिन्धुरेन्द्राणां नदन्नासासिरामुखम् ॥ ४० ॥

घर्मांशुकिरणग्रासात् परितप्त इवाधिकम् ।
अगाहत महाम्भोधीनवनीक्षोदसंचयः ॥ ४१ ॥

वितेनिरे करेणूनां करशीकररेणवः ।
घनस्य सेनारजसः करकाकारचातुरीम् ॥ ४२ ॥

ततः सेनागजेन्द्राणां कर्णतालानिलोद्धता ।
अवार्यत रजोराजिः करशीकरदुर्दिनैः ॥ ४३ ॥

अथ कल्पान्तसंक्षिप्तसप्ताम्भोनिधिसन्निभम् ।
क्रमात् प्रयातुमारेभे स्फारकोलाहलं बलम् ॥ ४४ ॥

तुरङ्गखुरकुद्दालदलितादपि भूतलात् ।
न पुनः पांसुरुत्तस्थौ महेभमदवृष्टिभिः ॥ ४५ ॥

तं तुङ्गभद्राकल्लोलशीकरासङ्गशीतलः ।
आनुकूल्येन यानार्थमाचकर्षेव मारुतः ॥ ४६ ॥

अथ लङ्घितकर्णाटः पञ्चषैरेव वासरैः ।
प्रापत् कम्पमहीपालः कण्टकाननपट्टणम् ॥ ४७ ॥

स तत्र दिवसान् कांश्चिदतिवाह्य महाबलः ।
अभिषेणयितुं चम्पमुपाक्रमत कालवित् ॥ ४८ ॥

प्रसृतैस्तच्चमूधूलिस्तोमैः क्षीरतरङ्गिणी ।
कीर्त्या चम्पक्षितीन्द्रस्य साकं कलुषतामगात् ॥ ४९ ॥

स दुग्धवाहिनीवीचिमारुताधूतशाखिनि ।
विरिञ्चिनगराभ्यर्णे न्यवेशयदनीकिनीम् ॥ ५० ॥

अथ सन्नद्धसैन्यस्तं न्यरुन्ध द्रमिडाधिपम् ।
घनीकृतहिमानीको हेमन्त इव भास्करम् ॥ ५१ ॥

संवर्तमारुताक्षिप्तसमुद्रद्वयसन्निभौ ।
व्यूहौ द्रमिडकर्णाटनाथयोः संनिपेततुः ॥ ५२ ॥

पादातप्राप्तपादातं हास्तिकाक्रान्तहास्तिकम् ।
आश्वीयमिलिताश्वीयमासीदायोधनं तयोः ॥ ५३ ॥

असह्यैस्तत्र वीराणां सिंहनादविजृम्भणैः ।
दिगन्तदन्तिनो मुक्तफीत्कारं मुमुहुर्मुहुः ॥ ५४ ॥

रजस्तमसि वीरास्त्रसङ्घसंघट्टनोत्थितैः ।
बभ्रे स्फुलिङ्गसंघातैः खद्योतनिवहद्युतिः ॥ ५५ ॥

संग्रामदेवतापाङ्गविभ्रमभ्रान्तिदायिनः ।
मिथो धनुर्धरैर्मुक्ताः पेतुः शातमुखाः शराः ॥ ५६ ॥

क्षतजार्द्राः प्रवीराणां प्रेङ्खन्त्यः खड्गलेखिकाः ।
जिघत्सतः कृतान्तस्य जिह्वा इव विरेजिरे ॥ ५७ ॥

आस्रापगासु परितो निस्सृतासु सहस्रशः ।
भटानां भल्लनिर्लूनैरम्भोजायितमाननैः ॥ ५८ ॥

कृपाणकृत्तान् वेतण्डशुण्डादण्डानिवाभितः ।
भुजङ्गशङ्किनो गृध्रा जगृहुर्भूभुजां भुजान् ॥ ५९ ॥

वेतण्डशुण्डाहर्म्याग्रमास्थिताः सचमत्क्रियम् ।
आद्रियन्त कबन्धानां (न?र)त्तं नक्तंचरस्त्रियः ॥ ६० ॥

वीराः कुञ्जरकुम्भेषु शायिनः शत्रुसायकैः ।
प्राबुध्यन्त सुरस्त्रीणां कुचकुम्भेषु तत्क्षणात् ॥ ६१ ॥

ततः कम्पनरेन्द्रस्य भटैर्भुजबलोत्कटैः ।
पलायत पराभूता द्रमिडेन्द्रवरूथिनी ॥ ६२ ॥

उल्लङ्घ्योल्लङ्घ्य धावद्भिर्भीत्या भ्रंशितमायुधम् ।
प्रायः प्रथनसंन्यासे शपथः कैश्चिदादधे ॥ ६३ ॥

हतानुकारिणः केचित् क्षितौ निपतितास्ततः ।
क्रोष्टुभयेन धावन्तः कर्णाटान् पर्यहासयन् ॥ ६४ ॥

विक्षेप्तुं विस्मृतैश्चर्मफलकैर्निर्मितप्लवाः ।
मृषैव केचिदतरन् मृगतृष्णातरङ्गिणीः ॥ ६५ ॥

छायामेवात्मनः केचिद् धावन्तो भीतिभाविताः ।
अरातिशङ्कया कष्टं दष्टाङ्गुलि ववन्दिरे ॥ ६६ ॥

अथ तस्य पुरीमेव नीत्वा शिबिरतां नृपः ।
अचलं राजगम्भीरमरुन्ध द्विषदाश्रितम् ॥ ६७ ॥

तद्दुन्दुभिप्रतिध्वानमुखरैः कन्दरामुखैः ।
भयादमन्दमाक्रन्दमकार्षीदिव पर्वतः ॥ ६८ ॥

प्रवाताभिमुखाधूतैः पताकापाणिपल्लवैः ।
आरोहणाय राजेन्द्रमाजुहावेव भूधरः ॥ ६९ ॥

अथ प्रववृते युद्धं सैन्ययोरुभयोरपि ।
पतदुत्पतदस्त्रांशुज्वलितोर्वीनभस्स्थलम् ॥ ७० ॥

अश्मयत्तालफलाकारैः प्राकाराद् बाणपातितैः ।
रणश्रीकन्दुकभ्रान्तिर्विदधे वीरमूर्धभिः ॥ ७१ ॥

अग्रे निपेतुर्नृपतेर्ग्रावाणो यन्त्रविच्युताः ।
दुर्गेणान्तरदानार्थं दूताः संप्रेषिता इव ॥ ७२ ॥

धानुष्कमुक्तबाणाग्निज्वलितोर्ध्वगृहावलिः ।
विजयारात्रिकं तस्य मूर्ध्नेवाद्रिरधारयत् ॥ ७३ ॥

विन्यस्तकुन्तनिश्रेणीश्रेणिभिर्वीरपुङ्गवैः ।
आक्रान्तसालशृङ्गाग्रैरारुह्यत महीधरः ॥ ७४ ॥

अथोद्भटभटक्ष्वेडागलितभ्रूणनाभिगान् ।
निहतास्रनदीमज्जज्जनताशाल्यजीवितम् ॥ ७५ ॥

........................................ ।
अलब्धनिर्गमं दुर्गमासीदेवमुपद्रुतम् ॥ ७६ ॥

(युग्मकम् ।)

निर्जगाम निजागाराच्चम्पक्ष्मापोऽपि कोपनः ।
कृपाणपाणिर्वल्मीकाज्जिह्माल इव जिह्मगः ॥ ७७ ॥

अहंपूर्विकया वीरेष्वभितो युद्धकाङ्क्षिषु ।
प्रत्यग्रहीन्महीपालश्चम्पं सिंह इव द्विपम् ॥ ७८ ॥

तौ निकुञ्चितपूर्वाङ्गौ निश्चलाक्षौ कृपाणिनौ ।
उचितस्थानकावास्तां चित्रन्यस्ताविव क्षणम् ॥ ७९ ॥

कक्ष्याविभक्तवपुषोश्चारीश्चिरतोस्तयोः ।
पश्यद्भिः सौष्ठवं देवैरनिमेषत्वमादृतम् ॥ ८० ॥

अन्तर्बिम्बितचम्पेन्द्रा कम्पेन्द्रस्यासिपुत्रिका ।
अप्सरोभ्यः पतिं दातुमन्तर्वत्नी किलाभवत् ॥ ८१ ॥

अथ वञ्चित[तत्]खड्गप्रहारः कम्पभूपतिः ।
अकरोदसिना चम्पममरेन्द्रपुरातिथिम् ॥ ८२ ॥

इत्थं सङ्गरमूर्ध्नि चम्पनृपतिं नीत्वा कथाशेषतां
श्रीमान् कम्पनृपेश्वरो जनयितुः संग्रामवाञ्छासनम् ।
काञ्चीन्यस्तजयप्रशस्तिरमिथस्संकीर्णवर्णाश्रमं
नीत्या नित्यनिरत्ययर्द्धिरशिषत् तुण्डीरभूमण्डलम् ॥ ८३ ॥

इति [श्रीगङ्गादेव्या विरचिते मधुराविजय-
नाम्नि वीर*]कम्परायचरिते
चतुर्थः सर्गः ।

---

## अथ पञ्चमः सर्गः ।

---

अथ स तत्र महीतलमण्डने मरतकाह्वयभाजि महापुरे ।
विरचितस्थितिरप्रतिशासनं जगदशेषमरक्षदनाकुलम् ॥ १ ॥

अरिबलापहमाश्रितनन्दनं सुमनसां मनसः प्रियदायिनम् ।
वसुमतीमवतीर्णमिवापरं हरिममंसत तं सततं प्रजाः ॥ २ ॥

प्रथितशक्तिरवाप्तफलोदयः प्रगुणयन् पणबन्धमुखान् गुणान् ।
निपुणधीर्निरपायमुपायवित् प्रभुरभुङ्क्त नवां नयसंपदम् ॥ ३ ॥

असुहृदां सुहृदामिव मण्डलेष्वजनि तेन न किञ्चिदलक्षितम् ।
प्रहितचारगणेन विवस्वता प्रसृतदीधितिना भुवनेष्विव ॥ ४ ॥

करपरिग्रहमाचरति प्रभौ मृदुतरं मुदितप्रकृतिर्मही ।
विविधसस्यविशेषनिरन्तरा पुलकितेव भृशं समलक्ष्यत ॥ ५ ॥

द्रढिमशालिनि भोगमनोहरे कटकधारिणि दानगुणो[र्जिते*] ।
नृपतिदोष्णि निवासमुपेत्य भूरलघयत् प्रथमास्पदगौरवम् ॥ ६ ॥

नरपतेः प्रतिहारमहीं मुहुर्विजयदन्तिमदोदकपङ्किलाम् ।
क्षितिभुजां भुजभूषणघट्टनप्रसृमरो मणिरेणुरशोषयत् ॥ ७ ॥

अहरहर्नृपतेः पदपीठिकातटसमुल्लिखितैरलिकस्थलैः ।
पुनरिवार्पितभाग्यमयाक्षरे रजनि वैरमुचामवनीभुजाम् ॥ ८ ॥

मगधमालवसे(म?वु)णसिंहलद्रमिलकेरलगौ(ल?ड)मुखैर्नृपैः ।
अवसराप्तिपरैरनुवासरं रुरुधिरे प्रतिहारभुवः प्रभोः ॥ ९ ॥

परिसरद्वयचामरधारिणीकनककङ्कणरिङ्खणनिस्वनः ।
अशमयन्नृपतेर्बिरुदावलीमुखरमागधमण्डलवैखरीम् ॥ १० ॥

चतुरचङ्क्रमचारुसरस्वतीचरणनूपुरशिञ्जितमञ्जुलैः ।
भृशमरज्यत कम्पमहीपतिः सदसि सत्कविसूक्तिसुधारसैः ॥ ११ ॥

तरलिताङ्गुलिताडितवल्लकीनिरततान्ननिरन्तरितैः स्वरैः ।
जगुरमुष्य जगत्प्रथितं यशो गमकभङ्गितरङ्गितमङ्गनाः ॥ १२ ॥

उचिततालमुदञ्चितविभ्रमं चतुरचारिचमत्कृतसौष्ठवम् ।
मुहुरसाववरोधमृगीदृशां मुखरसोज्ज्वलमैक्षत नर्तनम् ॥ १३ ॥

हततरक्षु परिक्षतसैरिभं मृदितरङ्कु निषूदितसूकरम् ।
ग्लपितखड्गि गृहीतमतङ्गजं वनमसौ मृगयासु मुहुर्व्यधात् ॥ १४ ॥

अथ सुगन्धिहिमान् व्यजनानिलान् मृगदृशः कृतचन्दनचर्चिकाः ।
शशिमतीश्च निशाः प्रियतां नयन् नरपतेरुदभूद् ऋतुरूष्मलः ॥ १५ ।

विकचपाटलगन्धिसमीरणैः सलिलकेलिपरायणयौवतैः ।
रजनिदैर्घ्यहरैरधिकोल्लसद्रविमहोभिरहोभिरभूयत ॥ १६ ॥

नियतिनिर्मितदक्षिणदिग्वधूविरहतापनिवारणवाञ्छया ।
अहिमभानुरहन्यहनि ध्रुवं हरितमाप हिमाचलशीतलाम् ॥ १७ ॥

परुषतापविशेषपरिस्खलद्रथतुरङ्गममन्दगताविव ।
अहिमधाम्नि रथाङ्गसुखावहामहरगा[द्दत दै*]र्घ्यवतीं दशाम् ॥ १८ ।

सरसचन्दनधारिषु मौक्तिकत्रिसरनिर्झरहारिषु सुभ्रुवाम् ।
कुचतटेषु निदाघनिपीडितो धृतिमधात् कुसुमायुधकुञ्जरः ॥ १९ ॥

सलिलकेलिकुतूहलकुन्तलीकुचतटाहतिजातभयैरिव ।
अपसृतैरजनि प्रतिवासरं नृपतिगेहविहारसरोजलैः ॥ २० ॥

प्रचुरघर्मपयःकणजालिकागुणितमौक्तिकमण्डनशालिभिः ।
नवशिरीषवतंसमनोहरैः सुवदना वदनैस्तममोदयन् ॥ २१ ॥

दिनविरामविकस्वरमल्लिकाकुसुमसौरभहारिषु सुभ्रुवाम् ।
कचभरेषु निवेशयतो मुखं नरपतेर्न वितृष्णमभून्मनः ॥ २२ ॥

हिमगृहेषु निरन्तरशीकरप्रकरदर्शिततारकपङ्क्तिषु ।
दिवसतापमहापयदायतं वरवधूसहितो वसुधाधिपः ॥ २३ ॥

अथ दलन्निचुलद्रुममञ्जरीनिचयदर्शितचामरविभ्रमः ।
कृतनुतिः किल चातकयाचकैर्नृपतिमन्वगमज्जलदागमः ॥ २४ ॥

तत इतो विहरत्तटिदङ्गनाललितलास्यहरिन्मणिमण्डपैः ।
पटुमृदङ्गरवोपमगर्जितैर्निबिडमाविरभूयत वारिदैः ॥ २५ ॥

स्फुटतटित्तपनीयगुणोज्ज्वलैः पृथुपयःकणमौक्तिकसङ्गिभिः ।
अलिकदम्बकसच्छविभिर्दिशामसितकञ्चुलिकायितमम्बुदैः ॥ २६ ॥

हरितलोहितपाण्डुरराजत त्रिदशराजशरासनलेखिका ।
मरतकोपलविद्रुममौक्तिकैर्विरचिता रशनेव नभश्श्रियः ॥ २७ ॥

रुधिरबिन्दुनिभच्छविरन्वगात् क्षितितले हरिगोपपरम्परा ।
घनघरट्टपरस्परघट्टनक्षरदिरम्मदवह्निकणावलिम् ॥ २८ ॥

पटुपुरःपवनाधिगतभ्रमा जलमुचः करकोपलकैतवात् ।
सलिलराशिपयस्सहचूर्षितामुदवमन्निव मौक्तिकसंहतिम् ॥ २९ ॥

अभिमते सति वारिधरोदये मधुरषड्जमनोहरगीतिभिः ।
गिरितटीषु मुहुः परिमण्डलीकृतकलापमनर्ति शिखण्डिभिः ॥ ३० ॥

पटुतटिद्गणकोणहताः पुरो रतिपतेः पटहा इव दिव्यकाः ।
निशमिताः स्फुटसाहसमध्वगैर्जलधरा वियदध्वनि दध्वनुः ॥ ३१ ॥

दलितकन्दलमुच्छ्वसदर्जुनं स्फुटकदम्बमुदञ्चितकैतकम् ।
मुदितचातकमुन्मुखबर्हिणं कतिचिदास दिनानि वनान्तरम् ॥ ३२ ॥

करतलैरिव गन्धवहैर्घनाः प्रहितकैतकपांसुविभूतयः ।
स्तनितहुंकृतिभिर्निरकासयन् नृपतियौवतमानमहाग्रहम् ॥ ३३ ॥

चलितबर्हिणचन्द्रकचित्रितैः सुरभिगन्धिशिलामदशालिभिः ।
विकचनीपवनैर्नृपतेर्मनो मुहुरहारि विहारमहीधरैः ॥ ३४ ॥

तमहरन्नहरत्ययमालतीकुसुमदन्तुरकुन्तलकान्तयः ।
परिहितागरुधूपितवाससः सुतनवो मृगनाभिसुगन्धयः ॥ ३५ ॥

मणिमयानि गृहाणि समीरणाः कुटजकैतकसौरभवाहिनः ।
मदकलाश्च गिरः प्रचलाकिनां क्षितिपतेः स्मरदीपकतां ययुः ॥ ३६ ॥

नववधूपरिरम्भणदोहलान्यनुपदं निनदैः प्रतिपादयन् ।
अलभत क्षणदासु घनागमो नरपतेः किल नर्मसुहृत्पदम् ॥ ३७ ॥

तदनु पद्मवनीपरिहासकस्त्रिदशनाथशरासनतस्करः ।
भुजगभुङ्मुखमुद्रणमौरिकः समुदभूत् समयो जलदात्ययः ॥ ३८ ॥

विधुतकाशसटाभरभासुरः प्रकटितोरुजपारुणलोचनः ।
व्यघटयद् घनदन्तिघटाः स्फुरद्रविमुखः शरदागमकेसरी ॥ ३९ ॥

अवितथं रजनीदिवसाधिपौ मधुरिपोर्नयने इति भाषितम् ।
स्फुटममुष्य यतः स्वपनात्ययादजनि तादृशमुन्मिषितं तयोः ॥ ४० ॥

कलशजस्य मुनेरुदयाज्जहुः कलुषतां सलिलानि महौजसः ।
सदुपदेशवशादिव शासितुस्तनुभृतां हृदयानि दयानिधेः ॥ ४१ ॥

विशदशारदनीरदशारितं वियदलक्ष्यत वीततटिद्गुणम् ।
प्रकटफेनकदम्बककर्बुरं जलमिवाम्बुनिधेर्गतविद्रुमम् ॥ ४२ ॥

नियतमम्बुदशाणनिघर्षणादतिमहस्कमहस्करमण्डलम् ।
अजनि वर्षविधोरपि वार्षिकैर्जलधरैः परिधौतमिवोज्ज्वलम् ॥ ४३ ॥

जलदकालकलिस्फुरितां शनैः कलुषतां प्रशमय्य कृशाः पुनः ।
घटयति स्म शरत् तटिनीसखीरुपनतैः कलहंसविलासिभिः ॥ ४४ ॥

सरसिजाकरसञ्चरदिन्दिराचरणहंसकनिक्वणमन्थरः ।
मदनमङ्गलतूर्यरवोऽभवन्मदकलः कलहंसकुलध्वनिः ॥ ४५ ॥

विकचपद्मविलोचनमात्मनो मुखमवेक्षितुमात्तकुतूहला ।
नियतमभ्रनिचोलकगर्भितः शरदकर्षदहर्पतिदर्पणम् ॥ ४६ ॥

विलसदुत्पललोचनशालिनीः स्फुरितचन्द्रमुखीः कुमुदस्मिताः ।
नरपतिः स्फुटतारकहारिणीर्निरविशद् दयिता इव यामिनीः ॥ ४७ ॥

परिणतेक्षुपरिच्युतमौक्तिकग्रथितहारमनोहरमूर्तिभिः ।
विशदमस्य यशो नृपतेः कलं कलमगोपवधूभिरगीयत ॥ ४८ ॥

दलदयुग्मदलोदरसौरभप्रसरपक्ष्मलिता वनवायवः ।
मुहुरधःकृतयन्तृनिवारणानकृषत क्षितिभृन्मदवारणान् ॥ ४९ ॥

वनभुवः परितः पवनेरितैर्नवजपाकुसुमैः कृतदीपिकाः ।
प्रथममेव नृपस्य निदेशतो विजयिनस्तुरगान् निरराजयन् ॥ ५० ॥

अथ नृपस्य समुत्सुकचेतसो [मदन*]केलिकलासु विलासिनः ।
प्रियमिवा[चरितुं*]समुपागमत् प्रणदयन्(?) क्षणदास्तुहिनागमः ॥५१॥

हिमभरैर्विहतः कमलाकरो मृदितकान्तिरभून्मृगलाञ्छनः ।
वदनमेव नरेन्द्रनतभ्रुवामभजत श्रियमप्रतिशासनाम् ॥ ५२ ॥

पुलककञ्चुकितैः कुचमण्डलैः स्फुरितसीत्कृतिभिश्च मुखेन्दुभिः ।
अविरतं स्मरतन्त्रमिवान्वभूदवनिपालविलासवतीजनः ॥ ५३ ॥

विकचकुन्दकलापपरिष्क्रियाविरचितालकजालकविभ्रमम् ।
असमयेऽपि समौक्तिकमण्डनं प्रभुरमंस्त निजं प्रमदाजनम् ॥ ५४ ॥

बहलकुङ्कुमपङ्कविलेपनप्रसृमरोष्मपयोधरमण्डलैः ।
अरमताविरतं रमणीजनैरगरुगान्धिषु गर्भगृहेषु सः ॥ ५५ ॥

इति सुखान्युचितानि हिमागमे समनुभूय मनोभवसन्निभः ।
शिशिरयामवतीष्वपि रागवान् रमयितुं रमणीरुदयुङ्क्त सः ॥ ५६ ॥

शबलितान्यलिकागरुबिन्दुभिश्चलदृशां रतिविभ्रमसूचकैः ।
नवलवङ्गतरुप्रसवास्तृतान्यभजतानुनिशं शयितानि सः ॥ ५७ ॥

परिलसन्नवलोध्ररजोभरच्छुरणपाण्डरगण्डतलैर्मुखैः ।
मृगमदद्रवचारुविशेषकैर्मृगदृशो नृपतेरहरन् मनः ॥ ५८ ॥

अपदिशञ्छिशिरानिलमङ्गकैः पुलकितैर्नृपतेः सविधं गतः ।
मदनसंभृतघर्मपयःकणैर्भृशमलज्जत मुग्धवधूजनः ॥ ५९ ॥

द्विगुणयन्नधरव्रणवेदनां कृतकचग्रहणैः परिचुम्बनैः ।
कपटरोषकषायितलोचनं निभृतहासमवैक्ष्यत यौवतैः ॥ ६० ॥

विकलकञ्चुकलक्ष्यन(व?ख)व्रणं विगतमौक्तिकहारमनोहरम् ।
तरुणिमोष्मनखम्पचमङ्गनास्तनयुगं हिमहारि विभोरभूत् ॥ ६१ ॥

उपहरन् कुसुमानि महीरुहां किसलयैः कलिताञ्जलिबन्धनः ।
मधुरकोकिलकूजितभाषितो मधुरथैनमुपासितुमासदत् ॥ ६२ ॥

मधुसुगन्धि रजः सहकारजं मलयशैलसमीरणमान्त्रिकाः ।
प्रणयरोषपराङ्मुखमानिनीहृदयसंवननार्थमिवाकिरन् ॥ ६३ ॥

उपवनेष्वगमन्नुपमेयतां स्फुटरुचो नवकिंशुककुड्मलाः ।
मथितपान्थमृगक्षतजारुणैर्मदनकेसरिणः कुटिलैर्नखैः ॥ ६४ ॥

चटुलषट्पदकज्जलपातिनी विरुरुचे नवचम्पकमञ्जरी ।
प्रकटितेव हिमात्ययमश्रिया स्मरमहोत्सवदीपपरम्परा ॥ ६५ ॥

मधुनि मुग्धदृशां मुखसंस्तवात् तदनुषङ्गितया बकुलेषु च ।
मरुति चैतदनुक्षण[सौहृ*]दात् समुचितोऽजनि सौरभसङ्क्रमः ॥ ६६ ॥

क्वणितनूपुरकुन्तलकामिनीचरणपङ्कजसङ्गवशादिव ।
मुखरभृङ्गमशोकमहीरुहैस्तदनुरूपमधार्यत पल्लवम् ॥ ६७ ॥

वरवधूपरिरम्भरसोल्लसल्ललितकुड्मलकण्टकिताकृतिः ।
कुरवकः कुसुमेषुमचेतनेष्वपि विशृङ्खलवृत्तिमसूचयत् ॥ ६८ ॥

पथिक [सार्थ*]पराक्रमणोत्सुकप्रसवकार्मुककाहलनिस्वनः ।
मधुरपञ्चमरागरसाञ्चितो जगदरञ्जयदन्यभृतध्वनिः ॥ ६९ ॥

अधिगताभिनवार्तवसम्पदः स्तबकसंजनितस्तनविभ्रमाः ।
भ्रमरकामुकसंवननक्षमा वनलता ललितां दधिरे दशाम् ॥ ७० ॥

सुतनवः फलकेषु मधूत्सवे रतिपतिं परिलेखितुमुद्यताः ।
हृदयगोचरतामनिशं गतं हरिहरात्मजमेव समालिखन् ॥ ७१ ॥

[म*]दनवैरनि(भां?भं)निभृतं पुरः क्षितिपतिं कृतचन्दनचर्चिकाः ।
अधिकघर्मपयोभिरवागमन् मृगदृशो विकसत्पुलकैः करैः ॥ ७२ ॥

मुखरकङ्कणमाकुलमेखलं चलितहारलतं लुलितालकम् ।
अधिगतश्रममस्य वधूजनो रतिविशेषमशिक्षत डोलया ॥ ७३ ॥

उचितरागविशेषमनोहरे रतिपतेरुपगानविधौ स्त्रियः ।
नृपतिगोत्रकृतस्खलना ययुः प्रियसखीसविधेषु विलक्षताम् ॥ ७४ ॥

क्षितिपतिं किल कुङ्कुममुष्टिना समभिताडयितुं धियमादधौ ।
सपदि घर्मपयःप्रसरेण तं विगलितं न विवेद वधूजनः ॥ ७५ ॥

इति समुपचिताभिश्चातुरीभिर्विशेषान्
ऋतुषु समुपलभ्यान् निर्विशन् निर्विशङ्कम् ।
सुतनुभिरवियोगोत्कण्ठिताभिस्तृतीयं
व्यतनुत पुरुषार्थं कम्पराजः कृतार्थम् ॥ ७६ ॥

इति [श्रीगङ्गादेव्या विरचिते मधुराविजय-
नाम्नि वीर*]कम्परायचरिते
पञ्चमः सर्गः ।

---

## अथ षष्ठः सर्गः ।

अथ वरतनुभिः समं कदाचिद् विरचयितुं कुसुमापचायलीलाम् ।
प्रमदवनममर्त्यकामिनीभिर्हरिरिव नन्दनमासदन्नरेन्द्रः ॥ १ ॥

मुखरितमणिमेखलाकलापाः प्रचलितमन्वचलंस्तमायताक्ष्यः ।
उपवनलतिका इवोपगीतभ्रमरकुला मलयाद्रिगन्धवाहम् ॥ २ ॥

परिवहदनुरागपूरकल्पैः पदगलितैरथ यावकैर्वधूनाम् ।
सरणिररुणतामतीव नीता समजनि नूतनपल्लवास्तृतेव ॥ ३ ॥

विविधविलसितैर्विलासिनीनामसितासितारुणकान्तिभिः कटाक्षैः ।
कुवलयकुमुदारविन्दमालाखचितमिवामलमम्बरं बभासे ॥ ४ ॥

अजनयदवनीश्वरस्य चेतस्यसितदृशां मणिनूपुरप्रणादः ।
सहपरिचलितप्रसूनकेतोरवनमदैक्षवचापघोषशङ्काम् ॥ ५ ॥

अवनिपतिमनुप्रतस्थुषीणां हरिणदृशामितरेतरप्रसक्ताः ।
मधुरसमधुरा गिरस्तदानीं बहुविधभङ्गितरङ्गिता बभूवुः ॥ ६ ॥

वरतनु ! परतः प्रयाहि मन्दं हरिणदृशां पुरतः प्रयायिनीनाम् ।
पथि गतिरयशीर्णहारमुक्तामणिगणशर्करिले पदं न कुर्याः ॥ ७ ॥

नलिनमुखि ! न बोधय प्रसुप्तानिह मणिनूपुरशिञ्जितेन हंसान् ।
द्रुतगमनविघातमाचरेयुर्नियतममी तव पादपद्मलग्नाः ॥ ८ ॥

करनखरमरीचिमञ्जरीभिर्हृतहृदयो जलशङ्कया कुरङ्गः ।
अनुपतति विलोकयैकवारं सखि ! नियतं स निवर्तते विलक्षः ॥ ९ ॥

शशिमुखि ! शशिकान्तकुट्टिमेषु स्खलनभिया न पदात् पदं प्रयासि ।
इयमिह वदनानुबिम्बराजिस्तव न पुनर्नवपङ्कजोपहारः ॥ १० ॥

किमिति मृदुपदं प्रयासि मुग्धे ! ननु कितवः सह याति कामिनीभिः ।
नवकुसुमरजोन्धकारबन्धैरभिसरणार्हमिदं वनं दिवापि ॥ ११ ॥

अथ विदितमियं द्रुता गतिस्ते मुखमवलोकयितुं निवृत्य भर्तुः ।
न किमलमपराङ्गमेव तावद् दयिततमस्य मृगीदृशां मनांसि ॥ १२ ॥

स्तनजघनभरं तवालि ! जाने तदपि गतिस्त्वरया त्वया विधेया ।
न कलयसि निरन्तरं निषेव्या युवतिजनैर्बहु* ................ ॥ १३ ॥

.....................................................पतन्ति ।
मदनसुभटवारणास्त्रशङ्कां मनसि चकार चकोरलोचनानाम् ॥ ५५ ॥

करयुगकलितप्लवः प्रियाणां परिचलितोरुनितम्बमण्डलानाम् ।
........नच्छलादकार्षीत् सुरतगुरुः पुरुषायितोपदेशम् ॥ ५६ ॥

* तालपत्रादर्शे इत ऊर्ध्वं ४१ श्लोका न दृश्यन्ते ।

अवनिपतिरसि(ञ्चःक्त) दीर्घिकाया मुखकमलं सलिलेन साभिलाषम् ।
किमपि समधिकार्द्रपक्ष्मलेखं वदनमभूदरुणेक्षणं परस्याः ॥ ५७ ॥

प्रणयिनि सलिलापवारितेन स्पृशति करेण सलीलमूरुमूलम् ।
प्रकटितशफराभिघातभी(तःति)र्मिषति जनेऽप्यमुमालिलिङ्ग काचित् ॥ ५८ ॥

सलिलहतिभियापवृत्तगात्र्याः प्रचलितवेण्यपराङ्गकं परस्याः ।
धरणिपतिरमंस्त मीनकेतोः फलकमुपाहितखड्गवल्लरीकम् ॥ ५९ ॥

चरणविलुठितो विलङ्घितोरुः परिगतनीविरवासनाभिचक्रः ।
स्तनतटलुलितः क्रमेण तासां मुखशशिबिम्बमचुम्बदम्बुपूरः ॥ ६० ॥

विशदनखपदं वपुः सपत्न्या....नव पश्यति निर्निमेषमस्मिन् ।
व्यधित विहृतिकैतवेन काचित् प्रहितजला परिमीलिताक्षमेनम् ॥ ६१ ॥

विशदमधरमक्ष्यनञ्जनाभं विगतललाम वितन्वती ललाटम् ।
रतिरिव जलकेलिरङ्गनानामवनिपतेः स्पृहणीयतामयासीत् ॥ ६२ ॥

परिमुषितपटीरलेपनेष्व[ष्य*]विरललग्नसरोजकेसरेषु ।
कुचकलशतटेषु कुन्तलीनां नखरपदानि न लक्षितान्यभूवन् ॥ ६३ ॥

विहृतिरयपरिच्युतान् वतंसानसितदृशामनुदद् बहिः प्रवाहः ।
नहि जाडिमसमन्वितोऽपि कोऽपि श्रुतिविषयात् पतितैः करोति मैत्रीम् ॥

अपि दयिततमेन वारिताभिर्गृहसरसो विजहे न वारि ताभिः ।
परिलुलितललामचर्चिकाभिर्विहृतिरसान्महिलामचर्चिकाभिः ॥ ६५ ॥

अथ विहरणखेदमन्थराभिः सह निरगात् सरसो नृपः प्रियाभिः ।
कलशजलनिधेरिवाप्सरोभिर्विबुधतरुर्मथनश्रमालसाभिः ॥ ६६ ॥

स्फुटनखरदनाङ्कमङ्गनानां परिलगदार्द्रदुकूलदर्शितोरु ।
वपुरनुकलमैक्षत क्षितीशो जलकणदन्तुरदीर्घकुन्तलाग्रम् ॥ ६७ ॥

चिकुरनियमनेषु कामिनीनामभिनववस्त्रपरिग्रहान्तरेषु ।
अभिमतपददर्शनैरयत्नैरतिमदनं स्वममंस्त कम्पराजः ॥ ६८ ॥

ततः सैरन्ध्रीभिः कृतसमुचिताकल्परचनः
पुरन्ध्रीभिः सार्धं समधिगतशुद्धान्तवसतिः ।
त्रयीगीतं तेजस्त्रिपुरहरमाराध्य विधिवद्
यथार्हैर्व्यापारैर्नरपतिरहश्शेषमनयद् ॥ ३९ ॥

इति [श्रीगङ्गादेव्या विरचिते मधुराविजय-
नाम्नि वीर*]कम्परायचरिते
षष्ठः सर्गः ।

---

## अथ सप्तमः सर्गः ।

---

अथ कम्पनरेन्द्रसुभ्रुवां मुखपद्मान्यनुहार्य पङ्कजैः ।
अपराधभियेव भानुमानपरक्ष्माधरकन्दरामगात् ॥ १ ॥

परिचूषितदीप्तिरम्बुजैः पुनरूष्माणमिवाप्तुमौर्वतः ।
रयवल्गितवाहनो रविः पयसां राशिमवाप पश्चिमम् ॥ २ ॥

अपसर्पणसंभ्रमच्युतं दिनलक्ष्म्यास्तपनीयकुण्डलम् ।
रविमण्डलमाशशङ्किरे वरुणान्तःपुरवामलोचनाः ॥ ३ ॥

तरणेररुणीकृताः करैर्वरुणस्त्रैणकपोलभित्तयः ।
मदलोहिनिकामुपावहन् मदिरास्वादनमन्तराप्यहो ॥ ४ ॥

कमलोदरसंभृतं करैर्मधु पीत्वा रविरुज्झिताम्बरः ।
स्पृशति स्म दिशं प्रचेतसो न मदः कस्य विकारकारणम् ॥ ५ ॥

प्रथमां हरितं प्रभाकरो विरहय्यात्मनि तापमाप यम् ।
अपरामुपगम्य तं जहौ हृदयं कः खलु वेत्ति रागिणाम् ॥ ६ ॥

परलोकपथं प्रपेदुषः पुनरावृत्तिमपेक्ष्य भास्वतः ।
मुकुलीभवदम्बुजच्छलादकरोदञ्जलिबन्धमब्जिनी ॥ ७ ॥

प्रतिबिम्बपरम्पराम्बुधौ पवनोद्धूततरङ्गसङ्गिनी ।
नभसोऽवतरिष्यतो रवेर्मणिसोपानधियं व्यभावयत् ॥ ८ ॥

चरमाम्बुधिवीचिचुम्बितप्रतिबिम्बाश्रयि मण्डलं रवेः ।
दिवसान्तनटस्य धूर्जटेर्विदधे काञ्चनतालविभ्रमम् ॥ ९ ॥

चलचञ्चुगतद्विसाङ्कुरैर्दिननाथार्पितदीनदृष्टिभिः ।
रजनीविरहव्यथातुरैरथ चक्राह्वयुगैरभूयत ॥ १० ॥

उदधौ पतितस्य भास्वतः कतिभिश्चित् किरणैः खवर्तिभिः ।
उदपाद्यत कालकुञ्जरोद्दलिताहर्द्रुमशाखिकाभ्रमः ॥ ११ ॥

पतयालुपतङ्गमण्डलक्षरदंशूत्कररञ्जिताकृतिः ।
मधुकैटभरक्तलोहितामुदधिः प्राप पुरातनीं दशाम् ॥ १२ ॥

गतदीप्ति गभस्तिमालिनो विलुठ[द् वीचिषु बिम्ब*]मम्बुधेः ।
शफराः फलखण्डशङ्कया रसनाभिर्लिलिहुर्मुहुर्मुहुः ॥ १३ ॥

स्खलितातपलेशमायतैर्विटपिच्छायशतैर्वृतं जगत् ।
भयविद्रवदर्कसैनिकं तिमिरैः क्रान्तमिवैक्ष्यत क्षणम् ॥ १४ ॥

प्रवसन् दिवसात्यये न्यधादुभयेषूभयमुष्णदीधितिः ।
हृदयेषु वियोगियोषितां परितापं त्विषमोषधीषु च ॥ १५ ॥

खगमेकमवेक्ष्य तादृशं पतितं विष्णुपदातिलङ्घनात् ।
निभृतं चकिता इवाखिलास्तरुनीडेषु विलिल्यिरे खगाः ॥ १६ ॥

घटमानदलाररीपुटं नलिनं मन्दिरमिन्दिरास्पदम् ।
परिपालयति स्म निक्कणन् परितो यामिकवन्मधुव्रतः ॥ १७ ॥

अधिपङ्कजकोशमादधे बहिरालीनमधुव्रतच्छलात् ।
मधुसौरभरक्षणोत्सुका दिनलक्ष्मीरिव लक्ष्म जातुषम् ॥ १८ ॥

दिनवेषमपास्य यामिनीवपुषा कालनटस्य नृत्यतः ।
ददृशे जगता पितृप्रसूर्दिवि नेपथ्यपटीव पाटला ॥ १९ ॥

रविरथ्यखुरोत्थितापरक्षितिभृद्गैरिकरेणुशोणया ।
क्षणमेकमकारि सन्ध्यया वरुणाशारुणकञ्चुकभ्रमः ॥ २० ॥

वियति व्यरुचन् पयोधराः स्फुटसन्ध्यापरिपाटलत्विषः ।
अचिरावतरद्विभावरीपदलाक्षापटलानुकारिणः ॥ २१ ॥

नवपल्लवकोमलच्छविर्दिवि सान्ध्यो ददृशे महोभरः ।
(विनिःरवि)पातरयात् समुत्थितश्चरमाब्धेरिव विद्रुमोत्करः ॥ २२ ॥

उदियाय ततो दिगङ्गनाश्रवणाकल्पतमालपल्लवः ।
रजनीमुखपत्रलेखिकारचनारङ्कुमदस्तमोङ्कुरः ॥ २३ ॥

किमु धूमभरः प्रशाम्यतो द्युमणिग्रावगतस्य तेजसः ।
प्रससार दिशस्तमोमिषात् किमु मीलत्कमलालिसञ्चयः ॥ २४ ॥

हलिहेतिदलत्कलिन्दजालहरीकन्दलकालिमद्रुहः ।
परितस्तरुरम्बरस्थलीं परितः स्थूलतमास्तमोभराः ॥ २५ ॥

नयनानि जनस्य तत्क्षणान्निरुणद्धि स्म निरन्तरं तमः ।
रविदीपभृताभ्रकर्परच्युतकालाञ्जनपुञ्जमेचकम् ॥ २६ ॥

तदमंसत मांसलं तमस्तनुतारागणबिन्दुजालकम् ।
दिवसात्ययचण्डताण्डवच्युतमीशस्य गजाजिनं जनाः ॥ २७ ॥

तिमि...........रोपमैस्तरलाभैरुदभावि तारकैः ।
परुषातपतापितात्मनो गगनस्येव निदाघबिन्दुभिः ॥ २८ ॥

अवपत् किमु कालकर्षकस्तिमिराम्भःकलुषे नभस्तले ।
विमलामुडुबीजमण्डलीं नवचन्द्रातपसस्यसिद्धये ॥ २९ ॥

अहरत्ययरागपल्लवस्तमसा कन्दलितो नभस्तरुः ।
सृजति स्म निरन्तरं हरिद्विटपैस्तारककोरकावलिम् ॥ ३० ॥

अगमन्नभिसारिकाः प्रियाननुरागाञ्जनरञ्जितेक्षणाः ।
अभिनत्तिमिरेऽपि ताः पुनः श्वसितेनैव सुगन्धिना जनः ॥ ३१ ॥

जननीमुपलभ्य यामिनीमविकस्नेहदशाभिवर्धिताः ।
दिवसस्य लयं प्रपेदुषो गृहदीपा मुहुरर्भका इव ॥ ३२ ॥

उडुपुष्पकरम्बितं तमःकचभारं दधती निशीथिनी ।
अचिरादियमन्वपालयत् कुमुदस्मेरमुखी निशाकरम् ॥ ३३ ॥

तदनु क्षणदागमोल्लसत्कलशाम्भोनिधिवीचिरोचिषः ।
व्यरुचन् कतिचित् कराङ्कुराः शशिनः शातमखे दिशामुखे ॥ ३४ ॥

तरलालसतारकं मुखं कलयन्ती शरकाण्डपाण्डरम् ।
विगलत्तिमिराम्बरा बभौ हरिदैन्द्री हरिणाङ्कगर्भिणी ॥ ३५ ॥

अथ किञ्चिददृश्यतैन्दवं वपुरार्द्रोदयरागलोहितम् ।
बलशासनदिग्विलासिनीमुखसिन्दूरललामकोमलम् ॥ ३६ ॥

परिपिण्डितयावकारुणं प्रचकाशे हिमरश्मिमण्डलम् ।
रचितं नवरक्तसन्ध्यकैर्विजयच्छत्रमिवात्मजन्मनः ॥ ३७ ॥

परुषेऽपि तथा प्रभानिधौ विधुरं लोकमिमं परेयुषि ।
उदशिश्वसदाद्रतैःकरैरथ राजा मृदुभिर्नवोदयः ॥ ३८ ॥

अथ कम्पनृपोऽपि कृत्यवित् कृतसन्ध्यासमयोचितक्रियः ।
अवदत् सविधे स्थितां प्रियां भुवि गङ्गेत्यभिनन्दिताह्वयाम् ॥ ३९ ॥

कमलाक्षि ! कटाक्ष्यतामयं समयो वर्णनया रसार्द्रया ।
जन एष वचस्तवामृतं श्रवसा पाययितुं कुतूहली ॥ ४० ॥

इति सा दयितेन भाषिता दरनम्रं दधती मुखाम्बुजम् ।
वदति स्म शनैः शुचिस्मिता सरसोदारपदां सरस्वतीम् ॥ ४१ ॥

स्वदमानसुगन्धिमारुतः प्रसरत्कोमलचन्द्रिकोदयः ।
नृपचन्द्र ! निरीक्ष्यतामयं [समयः*] पोषितपुष्पसायकः ॥ ४२ ॥

परिरभ्य दृढं चिरागतः प्रथमाशासुदृशा निशापतिः ।
[श्लथयत्यय*]मंशुभिः खैस्तिमिरश्रेणिमयीं प्रवेणिकाम् ॥ ४३ ॥

प्रथमाचलमौलिमुच्चकैरधिरुह्याम्बरपात्रसम्भृतम् ।
अयमंशुमृणालिकामुखैस्तिमिरं चूषयतीव चन्द्रमाः ॥ ४४ ॥

अलिनीलमयस्तमोमयं प्रविलाप्योदयरागवह्निना ।
कलयत्ययमोषधीश्वरः कलधौतं शुचि कौमुदीमिषात् ॥ ४५ ॥

शशिमण्डलशङ्खपेटकादवकृष्य क्षपया समर्पितम् ।
कुमुदच्छवि कौमुदीमयं दधती क्षौममभाद् दिगङ्गना ॥ ४६ ॥

हरितं परिरभ्य वासवीं हरिणाङ्कः करपातलीलया ।
स्पृशति प्रणयात् कुमुद्वतीं बत ! विश्वासपदं न कामिनः ॥ ४७ ॥

मुहुरामृशदेव पद्मिनीमपि रागी क्षणदाकरः करैः ।
यदमुं प्रति नेयमुन्मुखी प्रभवत्यत्र पतिव्रतागुणः ॥ ४८ ॥

अनुदर्शमनुप्रवेशतस्तपनाच्छक्तिमवाप तापिनीम् ।
नियतं हिमदीधितिर्यतः क्षमते तापयितुं वियोगिनः ॥ ४९ ॥

अलिविभ्रममन्तरेति यन्न विधोस्तन्मृगलक्ष्म किन्त्वयम् ।
पुरजिद्रथचक्रताजितो बहलः कज्जललेपकालिमा ॥ ५० ॥

मघवन्मणिभङ्गमेचकः शशिनि श्यामलिमा चकास्ति यः ।
जनयत्ययमङ्कपालिकाप्रणयालीननिशीथिनीधियम् ॥ ५१ ॥

कलयामि कलङ्ककैतवान्नियतं धारयते........ ।*

[इति श्रीगङ्गादेव्या विरचिते मधुराविजय-

नाम्नि वीरकम्परायचरिते

सप्तमः सर्गः ।*]

---

## अथाष्टमः सर्गः ।

---

................................................................ ।
..............................व्याघ्रपुरीति सा यथार्थम् ॥

अधिरङ्गमवाप्तयोगनिद्रं हरिमुद्वेजयतीति जातभीतिः ।
पतितं मुहुरिष्टकानिकायं फणचक्रेण निवारयत्यहीन्द्रः ॥

........नुघूर्णदूर्णनाभं वनवेतण्डविमर्दिनीमवस्थाम् ।
विरतान्यपरिच्छदप्रपञ्चो भजते हन्त! गजप्रमाथिनाथः ॥

घुणजग्धकवाटसम्पुटानि स्फुटदूर्वाङ्कुरसन्धिमण्डपानि ।
श्लथगर्भगृहाणि वीक्ष्य दूये भृशमन्यान्यपि देवताकुलानि ॥

---

*इतः परमुपत्रिंशपद्यनिवेशपर्याप्तं पत्रं तालपत्रादर्शे न लिखितम् । 'व्याघ्र-पुरी' त्यादीनां वृत्तभेददर्शनादष्टमसर्गान्तर्भावः संभाव्यते ।

मुखराणि पुरा मृदङ्गघोषैरभितो देवकुलानि यान्यभूवन् ।
तुमुलानि भवन्ति फेरवाणां निनदैस्तानि भयङ्करैरिदानीम् ॥

अतिलङ्घ्य चिरन्तनीं स्वसीमामपदेष्वर्पितजीवनप्रवृत्तिः ।
मुहुरुत्पथगामिनी तुलुष्कानधुना ह्यनुकरोति सह्यकन्या ॥

सतताध्वरधूमसौरभैः प्राङ्निगमोद्घोषणवाद्भिरग्रहारैः ।
अधुनाजनि विस्रमांसगन्धैरधिकक्षीबतुलुष्कसिंहनादैः ॥

मधुरोपवनं निरीक्ष्य दूये बहुशः खण्डितनालिकेरषण्डम् ।
परितो नृकरोटिकोटिहारप्रचलच्छूलपरम्परापरीतम् ॥

रमणीयतरो बभूव यस्मिन् रमणीनां मणिनूपुरप्रणादः ।
द्विजशृङ्खलिकाखलात्क्रियाभिः कुरुते राजपथः स्वकर्णशूलम् ॥

परितस्तततन्तुवायतन्तुव्यतिषङ्गाज्जनितानि जालकानि ।
पुरगोपुरसालभञ्जिकानां दधते चीनपटावगुण्ठनत्वम् ॥

हिमचन्दनवारिसेकशीतान्यभवन् यानि गृहाङ्गणानि राज्ञाम् ।
हृदयं मम खेदयन्ति तानि द्विजबन्दीनयनाम्बुदूषितानि ॥

न तथा कटुघूत्कृताद्व्यथा मे हृदि जीर्णोपवनेषु घूकलोकात् ।
परिशीलितपारसीकवाग्भ्यो यवनानां भवने यथा शुकेभ्यः ॥

स्तनचन्दनपाण्डु ताम्रपर्ण्यास्तरुणीनामभवत् पुरा यदम्भः ।
तदसृग्भिरुपैति शोणिमानं निहतानामभितो गवां नृशंसैः ॥

सुवते न यथापुरं वसूनि क्षितयो वर्षति पूर्ववन्न शक्रः ।
शमनोऽपि जनं नयत्यकाण्डे विषयेऽस्मिन् यवनैर्हतावशिष्टम् ॥

श्वसितानिलशोषिताधराणि श्लथशीर्णायतचूर्णकुन्तलानि ।
बहुबाष्पपरिप्लुतेक्षणानि द्रमिडानां वदनानि वीक्ष्य दूये ॥

श्रुतिरस्तमिता नयः प्रलीनो विरता धर्मकथा च्युतं चरित्रम् ।
सुकृतं गतमाभिजात्यमस्तं किमिवान्यत् कलिरेक एव धन्यः ॥

इति सा निखिलं निवेद्य राज्ञे यवनानां जनगर्हितं चरित्रम् ।
अतिभीषणमात्मनः प्रभावात् कमपि प्रादुरभावयत् कृपाणम् ॥

अथ तं कलधौतकोश[तः सा क*]रलग्नत्सरुरुच्चखान खड्गम् ।
अचिरोज्झितकञ्चुकानुबन्धस्फुटकालोरगभोगसाम्यभाजम् ॥

क्षयकालकरालभद्रकालीगलकालागरुकर्द[मायमा*]नैः ।
महसां प्रसरैरदीपहार्यं किमपि ध्वान्तमिव प्रकाशयन्तम् ॥

प्रतिबिम्बितदीपकान्तिमन्तः स्फुटतापिञ्छतरुप्रसूननीलम् ।
नवमम्बुधरं विडम्बयन्तं जठरोज्जृम्भितवैद्युतप्रकाशम् ॥

तमरातिनराधिनाथनारीनयनाम्भःकणपातहेतुभूतम् ।
प्रभुरुन्मिषितस्वरोषवह्नेरधिकोद्दाममममंस्त धूमदण्डम् ॥

(कलापकम् ।)

प्रणयागतचोलपाण्ड्यलक्ष्मीश्रवणेन्दीवरमालिकायमानम् ।
विरचय्य पुरः कृपाणमेषा पुनरप्याह पुरन्दराभमेनम् ॥

नरनाथ! पुरा कृपाणमेनं विरचय्याखिलदेवतायुधांशैः ।
उपदीकृतवान् पिनाकपाणेर्दनुजानां विजयाय विश्वकर्मा ॥

अमुमुग्रतपःकृतप्रसादः प्रददौ पाण्ड्यनृपाय सोऽपि देवः ।
यमुपेत्य चिरेण तस्य वंश्याः पृथिवीमप्रतिशासनामशासन् ॥

अथ कालवशेन पाण्ड्यवंश्यान् गतवीर्यानवधार्य कुम्भजन्मा ।
मनुजेश्वर! मण्डलाग्रमेनं भवते प्रेषितवान् महाभुजाय ॥

अमुना युधि दुःसहं महः स्यात् तव नैसर्गिकसाहसप्रवृत्तेः ।
ध्रुवमूष्मणि दारुणो दवाग्निः किमुतोच्चण्डसमीरसंस्तवेन ॥

अधिसङ्गरमस्य च प्रभावाद् भविता ते न कदापि सत्त्वसादः ।
असितोमरचक्रचापमुख्यैर्द्विषदस्त्रैर्वपुषो न चाभिषङ्गः ॥

अमुमास्त्रकरालरश्मिपालीरचितालीकतटिच्छटाविलासम् ।
धुवतस्तव चेष्टितुं पुरस्तान्न कृतान्तोऽपि भवत्यलं किमन्यैः ॥

अमुनाशु विशस्य दक्षिणस्यां मधुरायां पुरि कंसवन्नृशंसम् ।
यवनाधिपतिं बलोत्तरस्त्वं विदधीथाः स्फुटमच्युतावतारम् ॥

अनिदंप्रथमो हि धार्यतेऽसौ भवतान्यैर्मनसाप्यधारणीयः ।
भुवनत्रयरक्षणैकदीक्षाविधिशंसी कटकः (पद्मा?करा)म्बुजेन ॥

चलवेणिभिरुल्बणारुणाक्षैर्विपुलश्मश्रुभिरात्तसिंहनादैः ।
विकटभ्रुकुटीकरालफालैस्त्वरमाणस्तृणगात् (?)तुलुष्कशीर्षैः ॥

ग्रसतु प्रथनाह्वये दिनादौ प्रथमानो भवतः प्रतापसूर्यः ।
मधुपानमदप्रदोषरूढं यवनीनां स्मितचन्द्रिकाविकासम् ॥

अविनीतिदवानलानुबन्धादधिकोन्मीलदघर्मघर्मजातम् ।
निहताहितलोहिताम्बुवर्षैर्नृप! निर्वापय तापमुर्वरायाः ॥

परिपन्थिकबन्धकन्धरान्तःस्रुतरक्तासवपूरपारणाभिः ।
कटपूतनभूतयातुधानानभितस्तर्पयतात् तवैष खड्गः ॥

दुरितैकपरं तुलुष्कनाथं द्रुतमुत्खाय जगत्त्रयैकशल्यम् ।
प्रतिरोपय रामसेतुमध्ये विजयस्तम्भशतानि बाहुशालिन्! ॥

त्वयि नाथ! नियन्तृतां प्रपन्ने धृतवेगा स्थिरसेतुबन्धनेन ।
प्रथयत्वनुकूलयानलीलामचिरेणैव कवेरजाकरेणुः ॥ *

[इति श्रीगङ्गादेव्या विरचिते मधुराविजय-
नाम्नि वीरकम्परायचरिते
अष्टमः सर्गः ।*]

---

* इतः परं दश पत्राणि तालपत्रादर्शाद् विभ्रष्टानि ।

*............फलकेन केचित् प्रत्यार्थिनां वञ्चितबाणवर्षाः ।
अलक्ष्यपातं युगपत् कृपाणैः कृत्ताखिलाङ्घ्रींस्तुरगा....म् ॥

आसञ्जिताः कङ्कमुखैर्विमुच्य ............भुवनेषु पङ्क्तिः ।
आराच्चरन्त्या विरराज मृत्योरुत्तम्भिता तोरणमालिकेव ॥

कृत्ताः शशाङ्कार्धमुखैः पृषत्कैर्धनुष्मतां हास्तिकहस्तकाण्डाः ।
रक्तह्रदेषु न्यपतन् भुजङ्गाः पारीक्षितस्येव मखानलेषु ॥

मुक्ताफलैर्वीरकृपाणलेखाविभिन्नगन्धद्विपकुम्भमुक्तैः ।
रक्तारुणैस्तत्क्षणघट्टनोत्थस्फुलिङ्गसङ्घातमतिर्वितेने ॥

यावत् कृपाणेन विपाट्य कुम्भं निवर्तते सत्वरमश्ववारः ।
तावद् गृहीत्वास्य तुरङ्गमङ्घ्र्योरास्फालयामास गजस्तमुर्व्याम् ॥

निशाचराः केचन कुञ्जराणां कुम्भस्थलान्निस्सृतमास्रपूरम् ।
निष्ठ्यूतमुक्तामणयः सहर्षं चुचूषुरुत्पुष्करनालदण्डैः ॥

जिघत्सयान्तः पतगैः प्रविष्टैः प्रस्पन्दमानं कुणपं द्विपस्य ।
समीपमासाद्य सजीवबुद्ध्या व्यसुं सतृष्णोऽपि जहौ सृगालः ॥

चक्रैर्निकृत्तानि शिरांसि यावदाधोरणानां न पतन्त्यधस्तात् ।
अक्लिष्टशोभान्यवतंसहेतोस्तावत् प्रतीष्टानि निशाचरीभिः ॥

करेण कश्चित् पदयोर्गृहीत्वा क्षिप्तं दवीयो वियति द्विपेन्द्रः ।
पतन्तमाच्छिन्नकृपाणयष्टिः प्रत्यैच्छदुच्चैर्दशनद्वयेन ॥

क्षिप्तो गजेनोर्ध्वमसिद्द्वितीयः स्कन्धे निपत्यास्य पुरस्तरस्वी ।
निपात्य चाधोरणमभ्यमित्रं गजाधिरोहः स्वयमेव जज्ञे ॥

द्विषा सरोषेण पृषत्कवर्षैर्निषूदितः कोऽप्यमरत्वमेत्य ।
चकार तस्योपरि पुष्पवर्षं सहर्षमुद्घोषितचाटुवादः ॥

---

* इतः पूर्वं शताधिकश्लोकविच्छेदसंभावनया सर्गसङ्ख्या न निश्चेतुं शक्या ।

कुन्तेन कश्चिद् द्विषता विभिन्नस्तथैव संश्लेषममुष्य यातः ।
भिन्दन्नुरस्तेन चमत्कृतोऽभूद् गुणेषु को मत्सरमादधाति ॥

चिराय कौचित् कलहायमानावन्योन्यकौक्षेयककृत्तशीर्षौ ।
विमुक्तदेहौ तदनुक्षणेन ससौहृदौ दिव्यपुरीमयाताम् ॥

सङ्ग्रामवन्यामभितश्चरन्तो दर्पोद्धताः केचन राजसिंहाः ।
प्रत्यर्थिनां पार्थिवकुञ्जराणां शिरांस्यभिन्दन्नखरैः[खराग्रैः* ॥]

.............................................. ।
....स्तस्य विरोधियोधान् दृष्ट्वा जहासेव पलायमानान् ॥

एकप्रहारेण सकङ्कटानामाधोरणानां करिणां च देहैः ।
द्विधा विभिन्नैरभितो दिवेकुमीषत्करास्तस्य विमर्दमार्गाः ॥

कुम्भेषु भिन्दन् नृपतिर्द्विपेन्द्रान् मुक्ताफलैः शर्करिलान्तराभिः ।
प्रावर्तयद् रक्ततरङ्गिणीभिः परश्शताः संयति ताम्रपर्णीः ॥

तेन द्विपास्तोमरिणा विभिन्नाः कुंभस्थलैरुज्झितमौक्तिकौघैः ।
क्रौञ्चस्य जहुर्गुहशक्तिघातप्रकीर्णहंसप्रकरस्य शोभाम् ॥

रंहस्विनः स्वाभिमुखान् क्षितीन्द्रो मृगान् नखाग्रेण यथा तरक्षुः ।
प्रसह्य वक्षस्सु युधि प्रवीरान् क्षुण्णानकार्षीच्छुरिकामुखेन ॥

शूरस्तथा प्राहृत मुद्गरेण शिरस्त्रवन्ति द्विषतां शिरांसि ।
यथा विनिर्यन्नयनानि तानि मङ्क्षु न्यमाङ्क्षुः स्वशरीर एव ॥

[तस्मि*]न्निति व्यापृतहेतिजाते परापतन्त्यः परिपन्थिसेनाः ।
कल्पक्षयोदर्चिषि हव्यवाहे महाम्बुधेराप इवाशु ने[शुः*] ॥

न जामदग्न्येन न राघवेण तथा न भीमेन न चार्जुनेन ।
आपादितस्तेन यथा समीके हर्षो महर्षेः कलहप्रियस्य ॥

---

* इतः परं पत्रद्वयं निर्लेखं दृश्यते ।

ततस्तुलुष्कान् युधि [कान्दिशी*]कानालोक्य विष्फारितघोरशार्ङ्गं
कम्पक्षितीन्द्रं यवनाधिराजः प्रत्यग्रहीद् वृत्र इवामरेन्द्रम् ॥

तं वीरपाणाधिकपाटलाक्षं ललाटलक्ष्यभ्रुकुटीकरालम् ।
मदस्य रोषस्य च देहबन्धं संभेदमाशङ्कत वीरवर्गः ॥

निरायता तस्य तुरङ्गवेगा वेणिर्मणिश्रेणिमती चकाशे ।
अमर्षवह्नेर्ज्वलनोन्मुखस्य धूमच्छटेव स्फुरितस्फुलिङ्गा ॥

आस्फाल्यमानस्य च तेन गाढं शार्ङ्गस्य मौर्वीनिनदश्चकार ।
चिरात् परित्यज्य तमुच्चलन्त्या जयश्रियो नूपुरघोषशङ्काम् ॥

पराक्रमाधःकृतचोलपाण्ड्यं वल्लालसम्पल्लतिकाकुठारम् ।
रणोन्मुखं कम्पनृपोऽभ्यनन्दीद् वीरः सुरत्राणमुदग्रशौर्यः ॥

आकर्णमाकृष्टशरासनौ तौ मिथः किरन्तौ विशिखानसङ्ख्यान् ।
वीरौ स्वबाहुद्रविणानुरूपमायोधनं मानधनौ व्यधाताम् ॥

बाणा निरस्ता यवनेन तस्मिन्नपाङ्गपाता इव वीरलक्ष्म्याः ।
कम्पेश्वरेणाप्यभिपारसीकं शराः कटाक्षा इव कालरात्रेः ॥

स केरलप्राणमरुद्भुजङ्गान् वन्यावनीन्द्रद्रुमदाववह्नीन् ।
अन्ध्रान्धकारक्षयतिग्मभासो बाणानमुञ्चद् यवने नरेन्द्रः ॥

क्षतानि यान्यस्य शरैः शरीरे चकार वीरस्य तुलुष्कवीरः ।
वितेनिरे तानि नखाङ्कशङ्कां जयश्रियो भोगसमुत्सुकायाः ॥

उदग्रमग्रे यवनाधिभर्तुः साक्षात्कलेमौलिमिवाशुगेन ।
स मङ्क्षु सार्धं जयकाङ्क्षितेन ध्वाङ्क्षध्वजं ध्वंसयति स्म धन्वी ॥

अमर्षितस्याथ पृषत्कवर्षं विमुञ्चतो विद्विषतः शरेण ।
स कार्मुकज्यामलुनात् तुलुष्कराज्यश्रियो मङ्गलसूत्रकल्पाम् ॥

विहाय शार्ङ्गं धनुरिद्धरोषस्तुलुष्क[वीरस्त*]रवारिमुग्रम् ।
तुरङ्गपर्याणनिबद्धवर्धाविलम्बि(भिः?नं) सत्वरमुज्जहार ॥

अथाग्रहीत् कम्पनृपस्तमेव कौक्षेयकं काल[करालरूपम् ।
व्या*]पादनार्थं यवनेश्वरस्य यः प्रेषितः प्राक् कलशोद्भवेन ॥

विषच्छटाधूम्ररुचिर्नृपस्य कराग्रधूता करवाललेखा ।
[जिह्वेव रेजे*] यवनाधिराजप्राणानिलान् जिघ्रसिषोर्भुजाहेः ॥

स वञ्चयंस्तत्तरवारिधारां धाराविशेषप्रवणोपवाह्यः ।
अशातयत्तस्य शिरो निमेषा[दने*]न कर्णाटकुलप्रदीपः ॥

अज्ञातसेवोचितचाटुवादं तुलुष्कसाम्राज्यकृताभिषेकम् ।
दिवौकसामप्यकृतप्रणामं भूमौ सुरत्राणशिरः पपात ॥

च्युतेऽपि शीर्षे चलिताश्ववल्गानियन्त्रणव्यापृतवामपाणिम् ।
प्रतिप्रहारप्रसृतान्यहस्तं वीरः कबन्धं द्विषतोऽभ्यनन्दीत् ॥

मानोन्नते कम्पनृपस्य मौलौ पपात दिव्यद्रुमपुष्पवृष्टिः ।
स्वयंवराभ्युत्सुकराजलक्ष्मीविमुक्तमुक्ताक्षतजालकल्पा ॥

प्रशान्तदावेव वनान्तलक्ष्मीर्गतोपरागा गगनस्थलीव ।
कलिन्दजा मर्दितकालियेव दिग् दक्षिणासीत् क्षतपारसीका ॥

हृतावशिष्टानथ वैरियोधान् संरक्ष्य पादप्रण*........ ।
.................................................................. ॥

[इति श्रीगङ्गादेव्या विरचितं मधुराविजयं
नाम वीरकम्परायचरितं
समाप्तम् ।*]
शिवं भूयात् ।

* इयानेव तालपत्रादर्शः समुपलब्धः ।

## EXTRACTS FROM SELECT OPINIONS.

**The Modern Review** (March, 1917):—"In the extant Sanskrit anthologies the name of female poets and their selected verses are found not to a small extent, but we could not come across any complete work written by a poetess. We are, however, extremely glad to note and our sincere thanks are due to Pandits Harihara Sastri and Srinivasa Sastri that they have been able to bring to light a volume which may be regarded complete, though in fact not so, owing to the gaps left out by the scribe in the manuscript—the only manuscript from which it has been printed.

Its authoress, Gangadevi, was the queen of Kampana or Kampa, one of the kings of Vijayanagara (1367 A. D). The subject of her present work is the life of her royal consort with special reference to the conquest of Madhura (Madura) then under the flag of the Muhammadan rule. Hence the Kavya is termed Madhura-vijaya or Virakamparayacharita. The book thus throws a flood of light upon the history of that time in the Deccan. The historical importance of the work has been shown in an ably written introduction by Mr. T. A. Gopinatha Rao M. A., who is not unknown to the readers of the Modern Review.

As to the poetical merit of the work the poetess has exhibited her so much poetic talents in every direction that it deserves to be classed among the writings of Mahakavis (the great poets in Sanskrit literature).

It is written in strict conformity to the rules of a Mahakavya laid down in Sanskrit Rhetoric, and as the learned editors have pointed out, our poetess "writes in Vaidarbhi style, and her thoughts flow with ease and simplicity. Her diction is beautiful and charming and her similis are grand and drawn direct from nature." Indeed a new chapter will be added to Sanskrit literature by the discovery of this work, and India may be proud not only of her one Gangadevi, the sacred river Ganges, but also of another Gangadevi, the poetess of Madhura-vijayam."

VIDHUSEKHARA BHATTACHARYA.

:o:

**The United India & Native States** (11th June-1917):—"This charming poem published from Travancore gives the go-by to the old charge that Sanskrit has not produced Women poets. The discovery of the work is important not only as a reminder of female achievement in Sanskrit literature, but as a source of fresh first hand light on the early history of the Vijayanagara Empire."

---

**The Hindu Madras** (1st May 1917):—"A most valuable and pleasing work of a Hindu poetess whose talents have been surpassed but by few of our poets."

---

**R. Narasimhacharya M. A.**, Director, Archaeological Researches, Mysore (11-11-1916) :— The book contains several welcome items of information which add to our present knowledge of tbe Vijayanagara History."

---

செந்தமிழ் (தொகுதி ௧௫-பகுதி 2):—"இதிலுள்ள சுலோகங்கள் எல்லாம் சொற்சுவை பொருட்சுவை பொருந்திய செவ்விய நடையுடையனவாக விளங்குகின்றன. பெண்மக்களுள் வடமொழி வல்லுநராய் வைதுஷ்யமும் ஸாஹித்தியசக்தியுமுடையராய் காவ்யங்கள் செய்வோருமுளர் என்பதற்கு இது நிதர்சனமாயிருப்பது பற்றி மிகவும் பாராட்டற்பாலது.

இக்காவியத்தினால் தேவியாருடைய கல்வித்திறமை பர்த்ருவாத்ஸல்யம் ஞானசீலம் முதலிய பல குணங்களும் விளங்குவனவுமன்றிச் சரித்திரவாராய்ச்சி செய்பவர்கள் அறியவேண்டிய பல விஷயங்கள் வெளியாகின்றன. தேவியார் பேதையர் என்னும் பெண்மக்களுள் ஒருவராயிருப்பினும் அவர் சாமடைந்த வைதுஷ்யத்தை அவம் போக்காது விநியோகஞ்செய்திருப்பதைச் சற்று யோசித்துப் பார்த்தால் சாதாரணமாக பெண்கல்வியின் அருமையையும் அதை உபயோகிக்கும் முறையையும் அதனாலாகும் பயன்களையும் எல்லோருமறிந்துகொள்வதற்கேற்றதொரு படியமைப்புப்போல் விளங்கும் படி குலமகட்குத் தெய்வம் கொழுனன் என்ற கொள்கையுடையராய் வீரப்ரதாபாதி குணவிசேஷங்களை விஷயமாகக்கொண்டு பர்த்ருகீர்த்தனம் பண்ணித் தம் பர்த்தாவுக்கு இம்மையில் இன்பமும் புகழும் உண்டாக்கி "ப்புலவர்பாடும் புகழுடையோர் விசும்பின் வலவனேவாவான ஊர்தியெய்துப" என்றபடி மறுமையிலுத்தமலோகப்ராப்தியுண்டாகச்செய்துகொண்ட புத்திசாதுர்யம் நன்கு புலப்படத்தக்கது."

---